22

# छन्दस्वती

## षाण्मासिकी पद्यपत्रिका



रू
२०

छन्दस्वतीप्रकाशनम्, कल्याणी वीथी, मेलुकोटे - ५७१ ४३१

# सम्पादकस्यात्मनिवेदनासौ

व्यासो भासः कविकुलगुरुः कालिदासोऽपि वान्यः,
क्षेमेन्द्रो वा नहि भवति भो भोजराजोऽपि मान्यः।
काले कल्ये द्रविणविभवाज्जृम्भमाणे कराले,
गद्यं पद्यं तृणमिव समं काव्यातं त्ववद्यम् ॥

विचार्यते नैव विचारचातुरी
विभाव्यते नैव सुकाव्यमाधुरी।
विलोक्यते नैव वचस्सु बान्धुरी,
विजृम्भते वृत्तिरिहार्यवैधुरी।

छन्दोनिधीनां निलयो हि वाचाम्
छन्दस्वतीं पूर्वमुदैरयद्यः।
पुष्णीत वाणीं वरणीयभावाम्
वल्मीककौकास्तदिमां स सद्यः ॥

चिरात्कालादेतां सरसकवितायाः शिखरिणीम्,
प्रकाशं नो नीत्वा न भवति जनोऽयं गतभरः।
यथा पुष्टां प्रीत्या न तरति पितार्णं कुलवधूम्,
अदत्वा लोकाग्रे रसिकवरणीयां वरकरे ॥

पत्रिकामुद्रणे साह्यमावाह्य ये मित्रतामश्नुवन्तीह ते वन्धवः।
छन्दसा वन्धुरा सर्वदा सर्वदा संस्मरन्तीत्थमाभात्यसौ तानिह ॥

हायनम् २
अयनम् १+२

पारिवारिकप्रसारणाय

# छन्दस्वती

षाण्मासिकी पद्यपत्रिका

*जीयात्सा ध्वनिभावरीतिमहिता छन्दस्वती भारती*

ईश्वरसंवत्सरः श्रावणमाघपूर्णिमा १९९८

संपादकः
विद्वान् उमाकान्तभट्टः
मेलुकोटे

सहसंपादकः
विद्वान् भा वं रामप्रियः
मेलुकोटे

प्रवन्धकः
विद्वान् गङ्गाधरभट्टः
मैसूरु

प्रकाशकः
वैश्वामित्रः कृष्णगणपतिभट्टः
केरेकै

*पोषककविमण्डली*

शतावधानी रा गणेशः
वेङ्गळूरु

विद्वान् एच् वी नागराजराव्
मैसूरु

विद्वान् औरैयर् श्रीरामशर्मा
मैलुकोटे

मुखचित्रलेखिका
दिवंगता नागलक्ष्मीः

मुद्रकः
चारित्र प्रिंटर्स
मैसूरु-५७० ००४

शं

छन्दस्वतीप्रकाशनम्
१८८, कल्याणी वीथी, मेलुकोटे
कर्णाटकम् - ५७१ ४३१

# छन्दस्वतीपरिस्पन्दाः

श्रीः



# विस्मयलहरी

डा. अभिराजराजेन्द्रमिश्रः

क्षुत्क्षामकण्ठो म्रियते विपन्नो मधुस्वरः पञ्जरबद्धकीरः।
द्राक्षां खराः सादरमास्वदन्ते दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ १ ॥

अक्षीरिणी धेनुरितीव मत्वा न भूरिभक्ष्यं प्रददाति तस्यै।
श्वानं जनो भोजयते सयत्नं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ २ ॥

न दीर्यते हन्तशिलाकठोरं विलोक्य भिक्षुं हृदयं यदीयम्।
स एव पुत्रीकुरुते विडालं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ३ ॥

मरुत्तरङ्गायितलोलवापीजलेषु भेका जनयन्ति नादम्।
मौनं भजन्ते च पिकाः पयोदे दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ४ ॥

वराहमूथोन्मथिते नु पङ्के भान्ति स्वयम्भूनि सरोरुहाणि।
प्रतिष्ठिता नागफणा च गेहे दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ५ ॥

या रूपलावण्यनिधानभूता सा प्रायशो हन्त! दरिद्रभार्या।
ऐश्वर्यमत्ताः किल यातुधान्यो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ६ ॥

परार्तिसक्ताः परनिन्दनोत्काः परावमानं मधु मन्यमानाः।
न शीर्षपीडां दधते कदाचिद् दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ७ ॥

वाराङ्गनाश्चाऽप्यधरीक्रियन्ते याभिः कदाचारसरद्गृहाभिः।
ता एव नन्द्याः परितोऽभिनेत्र्यो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ८ ॥

यथा कपिः कोऽपि जहाति शाखां स्वैरं यथाभीष्टमितस्ततो वा।
तथैव भोक्तॄन् परिवर्तयन्ति दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ९ ॥

कुलं न शीलं समयो न धर्मो न चापि लोकाऽभ्युदयस्य चिन्ता।
अन्यो हि पंथाश्चलचित्रभाजां दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ १० ॥

गुह्यातिगुह्यानि जुगुप्सितानि वृत्तान्यवाच्यानि विगर्हितानि।
स्वैरं प्रदर्श्यन्त इहाधियन्त्रं[1] दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ११ ॥

स्फुटान्यमर्यादितचुम्बनानि गाढोपगूढानि रतिक्रियाश्च ।
प्रदर्श्यते सर्वमहोऽर्थलुब्धैर्दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ १२ ॥
न सन्ति तेषामपि किं युवानस्सुता युवत्यस्तदुपक्रमोत्काः ?
कश्चिन्तयेन्नाम तदीयभव्यं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ १३ ॥
विलूननासस्य रुचिर्यथाऽऽस्ते निर्णासिकत्वे जगतां समेषाम् ।
लोकक्षये तेऽपि तथैव लग्ना दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ १४ ॥
यत्साम्प्रतं लम्पटवण्डभण्डा अङ्गुष्ठमुद्रामितवैदुषीकाः ।
चरन्ति लोकेषु सहस्रसंख्या दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ १५ ॥
सेयं नवा संस्कृतिरस्मदीया विभाति राष्ट्रे चलचित्रदत्ता ।
कृतस्समाजो ननु वेशवाटो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ १६ ॥
गर्भो यथा सम्भवतान्न सद्यो निगीर्य तद्रोधसमर्थपथ्यम् ।
प्रदर्श्यते नित्यमिदं सघोषं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ १७ ॥
क्व जन्मदाता जनकः क्व पुत्री क्व सोदरौ ज्येष्ठकनिष्ठकौ वा ?
सर्वे सहास्थाय पिबन्त्यपेयं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ १८ ॥
यद् यन्निगूढं प्रमदेतिवृत्तं पुम्भिस्समाजे श्रवणीयमासीत् ।
तैरक्षिलक्ष्यीक्रियते तदेव दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ १९ ॥
नग्नं युवानं रतिवृत्तविग्नं समीक्षते मुक्तभया कुमारी ।
अर्थोरुकाङ्क्षं युवकस्तथा तां दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ २० ॥
आचार्यवर्यैर्भरतैर्निषिद्धं यद्यत्पुरा सर्वजगन्मनोज्ञैः ।
प्रदर्श्यते हन्त तदेव सर्वं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ २१ ॥
गृहेषु नारीजनवेदनीयं प्रसङ्गजातं यदभूद्रहस्यम् ।
तद्वाच्यते सर्वजनप्रकाशं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ २२ ॥
क्व गोपनं सम्प्रति भावनानां स्त्रियोचितानां क्व च शीलरक्षा ?
सर्वं विपन्नं नवसंस्कृतौ तद् दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ २३ ॥
क्व यास्यतीयं तटिनी प्लवोत्था संस्कारसद्वृत्ततटङ्कषोग्रा ?
क्व संस्कृतिः सङ्गमनीवसूनां दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ २४ ॥

हा हा विपन्नं परिलक्ष्यतेऽद्धा भूरलसराष्ट्रं ननु भारताख्यम्।
न रक्षकस्तस्य विभाति कोऽपि दृष्ट्वेति मे विस्मयमेति चित्तम्॥ २५॥
श्वभ्रे पतन्ती ननु भारतीया न वार्यते संस्कृतिरार्षमूला।
केनापि विज्ञेन बुधेन शास्त्रा दृष्ट्वेति मे विस्मयमेति चित्तम्।।२६।।
नाग्रेसरत्येव न याति पश्चात् सव्येतरे नापि च सव्यभागे।
नोच्चैरधो वा स्थितमद्य राष्ट्रं दृष्ट्वेति मे विस्मयमेति चित्तम्॥ २७॥
जातं न किं सम्प्रति लोकतन्त्रं राष्ट्रेऽस्मदीये किल शोकतन्त्रम्?
यस्मिन् समुज्जृम्भत एव दुःखं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ २८॥
न केऽपि दावाग्निशमे सयत्ना न चाऽप्यरण्यश्रियमाप्तुकामाः।
ज्वलत्यतस्सर्वत एव सर्वं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ २९॥
ये श्रद्दधाना ननु साम्यवादे धर्मच्युता नास्तिकताऽभ्युपेताः।
ते संसदि प्रज्ञपयन्ति धर्मं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ३०॥
कुषाणहूणादिवदार्यसंघानपीह केचिद्वहिरागतांस्तान्।
मत्वा तुरुष्कैः सह तोलयन्ते दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ३१॥
प्रतीयते विक्रयपण्यवीथी स्वराष्ट्रमाहात्म्यलसद्गरिम्णः।
खलम्भरा संसदहोऽस्मदीया दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ३२॥
स्फुटं न कस्यापि वचोऽधिहट्टं संश्रूयते हन्त कृतेऽपि यत्ने।
तथैव कोलाहलिनी सभेयं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ३३॥
न कोऽपि सम्यग्यतते समेषां सस्नेहमेकीकरणाय धुर्यः।
सर्वे पृथक्त्वाय समिद्धवीर्या दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ३४॥
ईदोत्सवे मुस्लिमपंक्तिधुर्याः केचित्स्वशाठ्याभिनयं वहन्ति।
तत्केवलं हा मतपत्रसिद्ध्यै दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ३५॥
हिन्दुत्वमेव स्वकुलक्रमाप्तं निन्दन्ति केचित्परतुष्टिलोभात्।
इतोऽवमानश्च ततो न मानो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ३६॥
स्वाज्ञानभारोपहताश्च केचित् मनुस्मृतिं सर्वविपत्तिमूलाम्।
मत्वा मनुं साधु विगर्हयन्ति दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ३७॥

कोऽयं पुनः क्षालयितुं प्रयासः पङ्केन पङ्कं क्रियतेऽल्पधीभिः?
वृथा श्रमो नैव च पङ्कमुक्तिर्दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ३८ ॥
तमस्तमस्काण्डमहो प्रसूते विभा विभाञ्चेति निसर्गरीतिः ।
तदन्यथा चिन्तयते किमर्थं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ३९ ॥
न वारिभिः पङ्कचयापनोदो विधीयते बुद्धिमता किमर्थम्
कथं प्रतीपे पथि पक्षपातो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ४० ॥
ये लम्पटाः स्त्रीजनशीलभक्षास्त एव हा तच्छिविकां वहन्ति ।
क्व सम्भवेत् तत्कुशलं वधूट्या दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ४१ ॥
परस्परं ये प्रतियोधयन्ति स्वैरं तुरुष्कानथ हिन्दुवर्गान् ।
चित्रं त एवोभयसन्धिकारा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ४२ ॥
एते पुनश्शासनतन्त्रकीटाः स्वासन्दिकारक्षणमात्रयत्नाः ।
विद्वेष्य लोकान् स्वयमात्मतुष्टा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ४३ ॥
चौर्याय चौरानमुका भणन्ति प्रबोधयन्त्येव च रक्षिवर्गात् ।
द्वन्द्वे द्वयोश्चापि सुखान्यमीषां दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ४४ ॥
विलीयते नाम्बुनि जातु तैलं तथा यथाऽदो लवणं सिता वा ।
उपेक्ष्यते हन्त तथापि सत्यं दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ४५ ॥
तुरुष्कहिन्दू न समादरौ स्तः यावद्धि राष्ट्रे समधर्मनिष्ठौ ।
तावन्मुधा शान्तिसुखप्रयासा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ४६ ॥
अद्यापि हिन्दूनथ हिन्दुराष्ट्रं स्वपूर्वजैर्ये जितमामनन्ति ।
तेषां जडानां क इवोपचारो दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ४७ ॥
मजारदर्गाहमहोत्सवेषु न हिन्दवः किं शतशः प्रयान्ति ।
तथापि रामे न तुरुष्कनिष्ठा दृष्ट्वेति मे विस्मयमेति चित्तम् ॥ ४८ ॥

[1] दूरदर्शनाख्ये ।

# श्रीस्तवनम्

अरैयर् श्रीरामशर्मा

श्रियं दिश्यादीशश् श्रिय इह महान् वोऽपि महतीं।
अहीनामीशं यश्शयनमधिशेते शुचिरुचिम्।
अहीनं योऽहीनामहितमहितानां रथयति
स्वयं यः पार्थाय प्रगुणनयदस्सारथिरपि ॥ १ ॥

श्रियस्तत्वं तस्याः पतिरपि कथं नाम कथयेत्
यदस्यास्सौभाग्यं न खलु पुरुपस्सोऽपि भजते।
स यां वक्षस्स्थल्यां वहति नियतं कौस्तुभसमां
स्तुमस्तामस्माकं यदुत जननीं लोकजननीम् ॥ २ ॥

क्वचिल्लोके पुत्रः पितरमपि च द्वेष्टि मलिनः
तथा कोऽपि स्याद्वा गुरुजनतिरस्कारकरगः।
कदाचित् कश्चिद्वा गलितसुकृतो द्वेष्टि जननीं
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ ३ ॥

अथ श्रीरेषा तु स्वपतिपरतंत्रा जगदिदं
सदैवं वात्सल्यान्नियमयति पत्युश्चरणयोः।
स्वयं प्रीता लोकैस् स्वचरणगतैस् सर्वफलदा
समेषां मातृत्वाज्जयति जगदीशस्य दयिता ॥ ४ ॥

इमां मन्ये लक्ष्मीं परमपुरुषादप्यतितरां
स्वसौभाग्यैर्विश्वाश्रयगुणविशेषैश्च जननीम्।
जनो विष्णुद्वेषी श्रियमिह न तु द्वेष्टि भुवने
श्रियं सम्पूज्यैव प्रभवति गुणैश्वर्यविभवैः ॥ ५ ॥

अहो! देवश् श्रीमान् जयति जगदीशस्स भगवान्
तदीयत्वादेषा जयति जगतां श्रीश्च जननी।

अथाप्येजाऽस्माकं गुरुकुलमुखं प्रापकतया
पतिं प्राप्यास्मासु प्रथयति कृपां तेन परमा ॥ ६ ॥
किमस्या माणिक्यद्युतिसहचरं पल्लवमृदु
प्रचारप्रोद्धासि श्रिय इह पदं वक्षसिं हरेः।
स्थितं काठिन्यं च प्रकटमपि दुःखं भुवनजं
सुसंम्मृज्य प्रेम्णा विरचयति पत्रावळिरुचिम् ॥ ७ ॥
जगज्ज्ञातं स्मेरं मुखमपि च विष्णोरिह यया
समुद्रोर्मिप्लावप्रचितरुचिमन्दस्मिततया।
सदालोकेनापि स्फुरितनवनीलोत्वलरुचा
समेतां तामेतां करुणरसपूतां श्रियमये ॥ ८ ॥
श्रियं भावं भावं श्रुतिजपपरस्तत्तनयतां
अनुप्राप्तो वेधास् सकलजगतां सृष्टिविधये।
श्रियो हस्तालम्बाद् रणरणकराजीविलसितं
हरेर्नाभीपद्मं भजति कुशलं स्म स्वभवनम् ॥ ९ ॥
श्रियं ध्यायंध्यायं स्मरशरहरस् सोऽपि च हरः
पितामह्यास्तस्यास् सकरुणकटाक्षैकविभवात्।
उमां कन्यां धन्यामकृत सुकृतैकप्रणयिनीं
उदूह्य प्रौढोऽपि प्रणयरसमन्यादृशमधात् ॥ १० ॥
श्रियं स्तावं स्तावं प्रतिदिनमघार्तो हि मघवा
महादेवीं भूमौ प्रणतनिजशीर्षार्चितपदाम्।
तदात्वे मञ्जीरोज्झणझणिततत्पादमकुटः
तथाऽऽयत्यां दिप्यस्फुरितमकुटोऽभूच्च सुराट् ॥ ११ ॥
श्रियं स्मारं स्मारं स्मर इह कृपालुं स्वजननीं
पुरारातिप्लुष्टस्वतनुरतनुर्वाऽपि झटिति।
नवां तत्वीमात्मन्यरतिमपहायान्विततनुः
समंपां हार्दोऽभूत सरतिरपि चान्यादृशरतिः ॥ १२ ॥

श्रियं नामं नामं स्मरहरविरिञ्चेन्द्रविनुतां
भृगोः पुत्रीं विष्णोरिह तु दयितां तामनुपमाम्।
अगस्त्योपश्लोक्यामुपरिचरवस्वादिविनुतां
सुतामम्भोधेरप्यहमिह नुवे लोकजननीम् ॥ १३ ॥

जगन्माता जानक्यपि भवति भैष्मी च धरणी
जया भारत्येवं भवति विजया चापि च दया।
कला कान्तिश्शान्तिः कृतिरपि रतिः कीर्तिरनघा
हरेर्नानारूपेष्वियमपि सुरूपाणि भजति ॥ १४ ॥

श्रियोऽस्याः प्रेयस्या नयननवनीळोत्पलदल-
स्फुरत्तामात्रेण त्रिभुवनजयी विक्रमवपुः।
भजन्नङ्गे गङ्गां प्रपद इह विष्णुर्ध्वजपटीं
जटाटीरं शुन्धन् जगदखिलमाप्लावयति च ॥ १५ ॥

अनागास्सागास्सन् जगति किल नागायिततया
मनस्वी स्वैश्वर्यादवगणितहर्यास्थद(दं) इह।
जनोह्यस्या आकुञ्चितनयनपक्ष्माङ्कुशहतः
तरस्वी घीङ्कारोङ्कृतिभिरभिगम्य प्रणमति ॥ १६ ॥

नमस्कर्मीकुर्मो वयमपि तु कर्मोपनिपतत्
तमस्तूलस्थूलप्रचयभयमूलप्रमथनम्।
पदद्वन्द्वं चेतःप्रणिहितमथ द्वन्द्वशमनं
श्रियः पत्युर्भद्रं हृदि निहितमुद्रं प्रतिदिनम् ॥ १७ ॥

स्तुमस्त्वां वामाक्षि ! स्फुरितशफरीनीरनलिनी-
दलालोलालोकप्रकटितमठैश्वर्यविभताम्।
यदालोकालोकानुकरणचणप्रौढमहिमा
पतिस्ते विष्णुस्त्वां शफरवपुषा प्रीणयति च ॥ १८ ॥

जगद् दारिद्र्येण श्लथमिह कथं ! तेऽम्ब ! विभवे
भवेऽस्मिन् सत्यप्याः ! कथमिह तु पश्यंत्यपि भवेः !।

भवे भावे भावे भजति हि भयं भो ! हि जनता
भवत्या भूयस्या यदि तु करुणाया न हि लवः ॥ १९ ॥
न किं कारुण्यं ते ! कथमिदमसत्यं नु कथये !,
त्वमेव त्वां वेत्सि, स्फुटमिह तु तथ्यं नु कथय ।
अहो साक्षान्मूर्ता त्वमिह करुणैवासि कमले !
त्वदन्यत् कारुण्यं त्वयि कथमिह स्यात् कथय भोः ! ॥ २० ॥
सतीं गीतां गौरीं गिरमपि च गार्गीमपि च गां
स्वधां स्वस्तिं स्वाहां धियमपि कुमारीमपि सुधाम् ।
ह्रियं गायत्रीं तां प्रकृतिमपि कीर्तिं रतिमपि
स्वशक्तीरम्ब ! त्वं वहसि परिवारेषु महिलाः ॥ २१ ॥
सुषुम्नायां तिष्ठन्त्यहह हरिमेकं तु भजतां
इडां पिङ्गामात्मन्यनुवहसि नीळामपि भुवम् ।
सुतानामस्माकं हृदि च षडरं चक्रमतुलं
स्वभर्त्राऽधिष्ठाय प्रियमपि हितं नः गलयसि ॥ २२ ॥
निदानं त्वं त्वम्ब ! प्रथिति-नति-नीति-द्युति-मति-
स्तुति-प्राप्ति-व्याप्ति-प्रकृति-हति-भूति-प्रभृतिषु ।
श्रुति-स्फाति-ध्याति-स्मृति-कृति-रति-व्याहृतिषु तां
सदानन्दो भर्ता हरिरतितरां राति भवतीम् ॥ २३ ॥
स्वरूपं ते कश्चित् कलयति हरेरेव तु यथा
तथा त्वं तेनासि स्वयमपृथगिष्टा सहचरी ।
स किं भास्वान् भासा रहित इह दृष्टः कथमपि ?
त्वयैवं विष्णुस् तन्न खलु युवयोरैक्यमिह तत् ॥ २४ ॥
भिदां विष्णोस् त्वत्तश् श्रुतिरपि वदत्येव, पितरं
गुणैस्सर्वैर्युक्तं तव तु पतिमालेश्वर इति ।
त्वमासीर्माता श्रीस् तदितरसमस्तेश्वरि ! वयं
दयापात्राण्येवं जगति युवयोरम्ब ! नियतम् ॥ २५ ॥

कथं देवि ! त्वत्तः कथय कथकानां परिषद-
प्यसौ सौति स्वाद्यां विविधपथवेद्यां तव कथाम् ।
अथाप्यन्तः कोऽपि स्थगयति महिम्नस्तव पथा
निरालम्वानम्व ! स्वयमवय दह्लेऽधिकगुणा ॥ २६ ॥

स्वयं वीरा लक्ष्मीस् त्वमिह तु हरेरेव हरतां
हरन्ती प्राहारीरहिमपि च कोलं च नरकम् ।
यदोरद्रौ कोले नरकपुरि साल्वस्य च वधे
विना पुंस्त्वं धत्से जननि ! परमं पौरुषगुणम् ॥ २७ ॥

असंख्यानामम्व ! श्रितसकलजीवार्तिहरणे
नितान्तं सज्ञानां तव चरणराजीवरजसाम्
अणुः कश्चित् कञ्चित् स्पृशति यदि सोऽप्यार्तिहरणः
समेषां लोकानां भवति, तदहो! ते तु महिमा ॥ २८ ॥

श्रियं लोके देवैर्बहुविहितसेवैरनुगतैः
अशेषैर्जुष्टां त्वां विविधवरवेषैः परिवृताम् ।
स भर्तुस्सेनानीस्तव चरणविन्यासमहितं
महामौळिं धृत्वा परिचरति शिष्यत्वमुपयन् ॥ २६ ॥

सगे मध्ये श्वेतं सरसिजमधिष्ठाय भवती
सुधाफेनस्वच्छं वहति च दुकूलं तनुतरम् ।
समं मुक्ताहारं तरलतरतारं च वलयं
समग्रं केयूराद्यनुपममहाभूपणगणम् ॥ ३० ॥



# उत्तरमोघः

[ अनुवृत्तः ]

श्रीजगन्नाथः मैसूरु

१ आ[1]गस्कारिण्यपि मयि विना चिन्तया या निराधि-
र्यस्याः कर्णाध्वनि मम गिरामध्वनीनत्वमिष्टम् ।
[2]चाकद्वन्द्वस्थितिजनभयव्रह्मकृत्यप्रवीणात्
तस्या गेहान्नयनमिलिताट्टोपि रोमाञ्चिता स्याः ॥

२ तूर्णं मा त्वं प्रविश सदनं हर्षतो ज्ञानहीना
पश्येतां चेज्झटिति भ[4]लुहौ त्वद्धविंष्यं न वेद्मि ।
प्रागेवैतद् विशदितमतो दुष्ठु जाते ततोऽग्रे
क्षेपेपूणां तव न भविता कक्ष्यता मे कथञ्चित् ॥

३ श्वनौ स्यातां यदि यमपुरीगृ[5]ह्यकत्वेन दृश्यौ
किं त्वं धर्माम्वरगरुडताभूपिताऽसि प्रकामम्
कम्पं ते हृद्यनुचितमहं भावये वस्तुतस्तु
त्वत्प्रेष्ठौ तौ खलसुजनयोर्भेदनिर्धूननेन ॥

४ विश्वासाय प्रभवति महाकूटकार्ये तदेव
प्रायो य[6]क्षाग्रनतिसुलभस्वान्तलीलाविनोदे ।
मिथ्यानीतिं यदिह भवती नाटकार्थं विभर्ति
प्रत्यादिष्टाखिलवरगुणा गाढमाक्रान्तपीठा ॥

५ सेत्स्यत्कार्या विहितविनया प्रारभस्व स्तुतीनां
श्रेणीं यावद्धपणविरतिं न श्रयेते किलामू ।
त्वद्बोधाय त्रिचतुरनुतीः श्रावये, दर्शितायां
अङ्गुल्यां त्वं गिलसि हि करं लोकसम्मोहपाठे ॥

६ पूर्वं वाणी त्रिदशसमितौ वल्लकीमस्पृशन्ती
हेतुं पृष्टा- सति हृदय-मु[7] त्-कारिणि श्व-प्रलापे ।

कस्य श्रोत्रे सृजतु निनदैः शर्म वीणे'- त्यवादीद्
वन्दे तादृङ्महिमनिविडध्वानकृद्भ्यां युवाभ्याम् ॥'
७ 'बद्धस्पर्धो मृदुतररवे कोकिलोऽयं युवाभ्यां
हन्त प्राप्तुं जयमसफलो भूरिलज्जो जनाग्रे।
आस्यं सन्दर्शयितुमनिशं सञ्चुकोच द्रुमाणां
शाखापत्राध्वनि निजगतीः क्लृप्तवांश्चाप्यधीरः ॥'
८ 'रूक्षं ध्वानं जलदसरणि[8]र्वां समाकर्ण्य भीत्या
यं कुर्वाणा दिशि विदिशि चाक्रोशमा[9]रादधावत्।
प्राप्येदानीमतिभयभरं स्फूर्जथुत्वं स एव
श्रुत्योरध्वन्यविरतशिलाकूटवर्षी हि जातः ॥'
९ 'शुण्डाया अप्यमरकरिणः पुच्छयोर्वा प्रकम्पे
प्राश[10]स्त्ये सत्यपि जलपशुं वाहनीकृत्य कश्चित्।
प्रायः पश्चात्तपनजशुचा स्वर्गगेहाधिपेन
क्लिन्नाक्षेणा[11]श्रु भुवि निपतद्दृ[12]ष्टिमूर्त्या विसृष्टम् ॥'
१० '[13]सत्यब्जह्रीपटुनियुवयोर[14]क्षिणी[15]ङ्यौ! स्फुरन्त्यां
दन्तश्रेण्यामपि वहु[16]मिलद्दाडिमीवीजपङ्क्तौ।
नासायां चम्पकविलयनप्रेमवत्याञ्च सत्यां
वर्हिं कैश्चिज्जडमतिभिरन्विष्यते [17]दृश्यशोभैः ॥'
११ ' शैकीं [18]वामाक्रमणसमयभ्राजितामेकवारं
वीक्ष्यान्त्यन्तं शिशिरवहुके हीनपानीयलेशे।
अप्राप्यान्ने हिमनिविडताजीविकाभूरिकष्टे
कैलासे द्रागू वसतिमकरोद् धूर्जटिस्ताण्डवज्ञः ॥'
१२ 'शौर्यं सिंहोरसि [19]वहलभीसम्प्रदायप्रवीणं
सङ्गीतेच्छुश्रवणसुभगं यौ[20]वयं भु[21]क्कणञ्च।
देवासूयाजनिपटुतरा यौ[22]वयी रूपसम्पत्
का शक्तिर्मे मितपदजुषो वर्णने वां महिम्नः ?'

१३ 'भोः श्वानौ ! कुक्कुर-स[23]मज-सद्रत्नभूतौ ! नरे[24]ड्यौ !
साष्टाङ्गेयं प्रणतिरधुना वां पुरस्तान्मदीया।
कार्यस्थार्थेऽञ्जलिविरचना गर्दभाग्रेऽपि कार्या
किं वाच्यं सा[25]प्रतिकधनिकप्रीतप[26]श्वानतौ मे ॥

१४ [27]कम्रस्वान्तः कृपणगणराट् कोऽप्यदत्वा धनं मे
मित्रे ! भोः कारयति युवको दौत्यकार्यं मयाऽद्य।
तस्माद् द्रष्टुं लषति तनुजां स्वामिनो यौ[28]वयस्य
स्वान्तं मे किञ्चिदपि लभतामित्थमाशां दधानम् ॥

१५ दन्तैर्मा मा सपदि दशतं [29]पण्डितौ ! मांसलोभाद्
वस्त्रैर्जातां चतुरहृदयौ ! यच्छतं मार्गमन्तः।
अध्वा मत्को धरतु वपुषः श्वेतिमानं मदीयात्
[30]पीठार्थित्वं भवतु युवयोर्भाविनिर्वाचनेषु॥'

१६ एवं रूपं कवनपतगं डाययित्वा वशं ता
वानीयाशु प्रकटय निजां वुद्धिमत्ताममोघाम्।
पाठं कोऽपि श्र[31]वसि न हरिश्चन्द्रजुष्टं विधत्ते
लोकः सर्वोऽप्यभिनयवतां मुह्यते पाटवेन॥

१७ वाक्यैरेतैरुदितहृदयामोदभूम्ना सखायौ
त्वत्कौ प[32]द्यां झटिति जहितस्त्वत्कृते तौ दयालू।
सद्मान्तः प्राक् प्रविश, सुदृढं मानुषीयं न चित्तं
स्वान्तं काले किमु कलि-गते हन्त ! कौले[33]यकीयम्॥

१८ गेहस्यान्तर्लघुशशनिभे ! पादविन्यासतः प्राक्
सम्यग् गच्छेः सखि ! पथि वृते कण्टकाकीर्णसस्यैः।
वैदेशैर्भारतजलपितश्रेण्यलव्धाभिधानै-
र्येषां स्थित्याऽऽधुनिकधनिता साक्षियुक्तत्वमेति॥

१९ अग्रे साधारणमनुजनिर्मापितं वीक्ष्य सौधं
माऽश्चर्यं ते भवतु हृदये शस्तवस्तुव्रजेन।

उद्योगेऽनुन्नतपदवता तादृशी सिद्धिराप्ता
[35]गूढं ज्ञात्री किमिह न भ[36]वत्यूर्ध्वधी राजकीये ?॥

२० यस्याः कस्या अपि किल पुरा धिक्पिशाच्याः पुरस्ता-
न्नत्या पूर्णाञ्जलिसहितया पीठमारूढवत्याः ।
प्रत्यूह्येऽन्यः स्थित इति कथं द्वारपालेऽथ दृष्टे
चिन्तोत्थास्यत्युरुतरपथस्तत्र किं ते न भाति ?

२१ आहोल्विच्चेत्तमभिलषसि प्रीतिमन्तं [37]भवत्या-
स्तस्योष्णीषं वद वरतरं दै[38]वराजात् किरीटात् ।
नीरूपं तं सखि ! कथय वा मन्मथप्राणनाशं
टोप्येतादृग्विषयविसरेष्वस्ति ते देशिकात्वम् ॥

२२ पर्याप्तिर्न स्फुरति यदि ते तस्य चाप्येतयोक्त्या
मित्र ! ब्राह्मीमभिनयझरां तच्छ्रुतौ पूरयैवम्-
आर्य ! त्वद्दृष्ट्यनुपदमियं स्नोहधारा हृदुत्था
शुद्धं साक्ष्यं प्रकटयति नौ पूर्वजन्मानुवन्धे ॥'

२३ पूर्वस्यां दिश्युदयमयते [39]द्वादशात्माऽधुना यद्
वर्षत्ये[40]तर्ह्यपि यदखिलं भूतलं वारिणाऽब्दः ।
एतल्लोकप्रियघटनयोः कारणत्वं भजन्तं
सौम्य ! त्वत्का हृदयसुभगा वृत्तयो लोकभव्याः ॥'

२४ कश्चिद्बुद्धिप्रसरसहितम्मन्यमानो विशुद्धे
भावत्के कर्मणि सुचरिते प्रेक्षतां दोषलेशम् ।
एतत्कृत्वा प्रचुरमतिमान् कृष्णरन्ध्रेषु दृष्टिं
स्वीयां वध्नात्वथ स दिनकृन्मण्डल श्री-स्थितेषु ॥'

२५ रात्रौ सूर्योऽञ्चतु निजरुचां मोपसंहारकृत्त्वं
मापीन्दुः स्वं दिनसमयजं दृश्यताऽभावमेतु ।
द्वावप्येतावथ सदृशतामार्य ! नक्तन्दिवं [41]ज्यो-
[42]गीहेतां [43]स्वः सदय ! भवता श्रम्यताऽर्थे परेषाम् ॥

२६ ऐन्द्रं वज्रायुधमिह किमित्यागतं ? स्वर्गलोका-
च्छापाद्भ्रंशश्चिरसमयतः शक्रसेवोत्थजाडयम् ।
मेदिन्यालोकनकुतुकधीर्हेतुपु त्रिष्वमीपु
[45]प्राग्र्यं कस्येति लपति जनस्त्वत्करे वीक्ष्य दण्डम् ॥[46]

२७ राष्ट्राध्यक्षीभवितुमवितुं भारतं क्षेमहीनं
योग्यत्वे सत्यपि वत भवान् द्वारपालो यदस्ति ।
तन्न स्पष्टीगमयति कलेर्दुष्टजुष्टं प्रभावं
लोकेऽनार्याधिकवलभरं सज्जनक्लेशसज्ञम् ॥

२८ मार्गेऽवैधे विहितगमन: कोऽपि सिंहासनस्थो
न्यायोपेताध्वनि तु पथिको द्वारपालत्वमेति
एतद् दृष्ट्वा मम हृदि तथा जायते तीव्रमौण्यं
सर्वोऽम्भोधिः प्रियसख यथा शुष्यति क्ष्मातलीयः ॥

२९ विद्याशून्यैर्वहुकलुषिते शिक्षणक्षेत्रपीठे
कोषे देशद्रविणनिविडे केनचिद् भक्ष्यमाणे ।
विद्वन् ! त्वादृग्वरजनकृते स्थानमेकं दवीयो[48]
मित्र ! स्यात् किं मयि तव हितप्रापयित्र्यां भवन्त्याम्

३० पुत्रीं द्रष्टुं कथयति गृहस्वामिनोः कोऽपि विद्या-
क्षेत्रे जातो य उपमिनुते क्षे[49]त्रियं सस्यमेव ।
तस्माद्दूरात् पदविरहिताऽप्यागताऽहं कदाचित्
प्राज्ञेष्वज्ञा निजहितकृते क्लेशकारा भवन्ति ॥

३१ सद्यान्तस्त्वं त्वरय, (१) वद मा तां गतां क्वापि कार्या-
(२) न्नेदं राजव्यवहृतिगृहे राजकीयं कुकर्म ।
(३) सा[50]चिव्यं सा न धरति गुणिन्, ४ वेतनस्य ग्रहीता
त्वं नाप्यन्तर्न भवति पतिर्वक्तुमेवं नियुक्तः ॥

३२ एवंरूपां वचनलहरीं निःसृतां त्वन्मुखाब्जा-
दाकर्ण्याम्भोनिधिगतसुधाधारया वद्धमैत्रीम् ।

हृष्टो गेहं विशति स मनाक्-स्पृष्टवैधेयभावो
वालामाकारयितुमधुना पश्यसि प्रेयसीं मे ॥

३३ शीघ्रं नेत्रद्वयपथगता काचिदालोकमेष्य-
त्यज्ञव्रातप्रथितकथनप्राप्तरूपा पिशाची ।
आहोस्विज्जङ्गमवटतरोः काण्ड एष स्थितः स्या-
देवं संशीत्यपगमनतो निश्चिनुहूर्वशीं मे ॥

३४ टोपि ! श्वेता त्वमिति भुवने सुप्रसिद्धैव वार्ता
कान्तिस्त्वत्का किमिति सहसा रक्तरिक्ता वभूव ।
जानीह्यस्या अधरयुगली-लिप्त-लिप्स्टिक्-प्रभाया
पाताज्नष्टस्तव सुरगजस्मारको हन्त ! वर्णः ॥

३५ पूर्वं स्तोत्रैर्जगदिथ शुनीं सूकरीं वानरीं वा
कार्यस्यार्थे रतिहृदि महाक्षोभसम्पादयित्रीम् ।
तादृश्यास्ते न हि गुरुतरं स्तोत्रमस्या जडाया
मृद्भक्षित्वं कियदिव शिलाकण्टका[51]द्यभ्ररस्य ? ॥

३६ आदौ हस्तद्वयमभिमताकारतो योजयित्वा
त्वद्दन्तश्रीपतनजनितं श्वेतिमानं दधानैः ।
केशैर्वृद्धा[52]भ्रमपटुतरां [53]दाम्भिकश्रेष्ठनामं
नत्वा कार्यं मम सखि ! चिराद्वाञ्छितं प्रारभस्व ॥

३७ टोपि ! स्रष्टुं वहुवलयुतान् प्रस्तरे ना[54]वनीत्यं
चामुण्डीमप्यतिशयतया सुप्रसन्नीविधातॄन् ।
वर्णानुच्चारय जडमतिश्रोत्रकुल्यामृतोत्सान्
कालेजूविद्यानिविडहृदयामोहजन्मानुकूलान् ॥

३८ हे ! स्वर्गौकःकुसुमरुचिरोद्यानखेलानिमग्न-
स्त्रीसंहत्युल्वणचरदसूयावलीकक्ष्यभूते ।
हे ! सौन्दर्याम्वरगतकसद्दिव्यतारे ! मनोज्ञे
हे ! लावण्याम्बुधिगतमणिश्रीप्रशस्ते ! नमस्ते ॥

३९ पादद्वन्द्वं मम न भवति, प्रेक्ष्यते स्पष्टमास्या-
भावो, व्योमाध्वकृतडयना पादुकां ते स्पृशामि।
सौन्दर्यं ते गुणसमुदयं प्रोन्नतां किञ्च विद्यां
स्तोतुं वाञ्छाऽऽगमयदिह मां साम्प्रतं दूरदेशात् ॥

४० सायङ्काले विकसितवतः पुण्डरीकस्य बन्धुं
चक्षुर्युग्मं तरुणि ! धरसीत्येवमुत्स्तोतुकामा।
जोषं तिष्ठाम्यहह ! कमलज्ञानहीना किल त्वं
डेरा-क्याकूटस्-प्रभृति-सुमनःकाल-सम्प्राप्त-जन्मा ॥

४१ हासात् त्वत्कात् सखिभिरवले ! जल्पकालेषु जाताद्
व्याघ्री स्वीये कृत-नर-भये जृम्भणे गर्वहीना।
शोभां ते घोषयति विपुलां गर्जनेन स्मि[55]नीयां
घोरारण्यान्तरित-विट[56]पि-स्तोमसञ्चार-कार ॥

४२ कार्तज्ञ्येन प्रणमति मनो [57]नाभिजातं मदीयं
काले विश्वप्रकटनपरे यः करेणुं ससर्ज।
येन क्लेशः कविसमुदये दैवतो नैव जात-
स्त्वद्रूपस्योचितसदृशताऽन्वेषणाय प्रवृत्ते ॥

४३ न्यूनीभूतं कथमिदमये ! भस्म, मत्प्रेतभूमे-
रेवं चिन्ताज्वलनशिखया दह्यमानान्तरात्मा।
नेत्राणि त्रीण्यपि पशुपतिर्न्यस्य रुण्डे त्वदीये
टाल्कम् पौडर् मुखगतमभिप्रेक्ष्य [58]हन्तैति सौख्यम् ॥

४४ [59]गन्धर्वेभ्यः श्रवणयुगले गानपीयूषधारां
[60]भारत्या अप्यनितरसमं वल्लकीनादमैच्छम्।
पूर्वं यन्मौक[61]लिविजयवत्कण्ठमाधुर्यधुर्ये
तत्रा[62]गस्वान् श्रवणविरहस्त्वत्कगीतस्य बाले ! ॥

४५ स्वीये श्वैत्ये[63]ऽप्यतिगमयितुं कान्तिमुग्रां तनोस्ते
कृष्णीभूतो निशि गगनगः श्वेत[64]भानुः स [65]दर्शे।

वैफल्येन क्षपितविभवः पूर्णिमायां पुनश्च
श्वेतीभूतो रचितविनयो वाञ्छति त्वत्प्रसादम् ॥

४६ एतावन्तं समयमितरो [66]यत्कविर्नाददाति
त्वत्सौन्दर्यं स्वकृतकवने तद् व्यनक्ति प्रकामम् ।
रूपं काव्ये जडविरचिते वर्ण्यतां ते न याति
त्वत्सौभाग्यात् त्रिचतुरबुधा मादृशा वर्णकास्ते ॥

४७ द्वित्रान् वर्णान् विलिखितुमतिक्लेशदोषोऽङ्गुलीभि-
र्बाले ! त्वत्को ध्रिय[67]त इति ये क्षे[68]पपाण्डित्यवन्तः ।
ते दौर्भाग्यान्न दधति मतिं त्वत्कवीक्षाकहर्यां
हस्त-क्षेत्र-प्रचुर-धन-वा[69]र्-वर्षणे पण्डितायाम् ॥

४८ नैरक्षर्यं न भवति प[70]दानर्हताकारिहेतुः
[71]सुज्ञाने ! शासनविधिकृते योग्यतैव क्वचित् तत् ।
एवं सत्यां तव वद कियान् [72]ज्ञानगेहप्रवेश-
श्चोरो निन्द्यः सति सुविभवे [73]पश्यतोमारके किम् ?

४९ यस्याद्य त्वं जतगणपुरः कर्तुकामाऽपमानं
खि[74]न्ना हस्ते स न कुपितवान् योगशास्त्रध्यधीती ।
ज्ञाता स त्वादृशजनशिरोनृत्यशैल्याः, कदाचि-
न्मार्गे साधावपि गतिजुषः पाददोषात् स्खलन्ति ॥

५० यद्यप्येष स्थिरतरमतिः क्ष्मासमानः क्षमायां
आ[75]गोहेतोर्भवति तव भीस्तत्प्रसादार्थनायाम् ।
तस्मात् पश्चात् [76]क्वथितमनसि त्वय्यनल्पानुकम्प-
स्त्वादृग्लोकाभयजनि-पटुर्मन्मुखेनेदमाह ॥

५१ अग्नेर्दाहो युवतिनिवहेन्द्राणि ! हे ! कण्टकेभ्यो
वेधः कन्ये ! शिरसि तरुणि ! प्रस्तराणाञ्च पातः ।
कोऽप्येतेषां जयति न महाचण्डि ते ताडनाग्रे
ब्रह्मास्त्राग्रे स्फुरति किमिषु प्रासकुन्तादि ? [77]रम्ये ॥

५२ शश्वद् योगोत्कटदृढमनाध्यानमग्नोऽपि भक्त-
प्रीत्या लोकप्रणतिजतपोभङ्गमङ्गीकरोमि।
तस्मादद्य त्वयि विरचितोऽनुग्रहोऽयं मदीयः
स्युर्मत्पादाद्वयनख[78]रुचेः पा[79]ण्डराः शी[80]र्षजास्ते॥

५३ प्रेमव्यक्त्यै मृदुलवचनं श्रीयते कैश्चिदन्यै
रन्यैर्वाचा वहुलकलहो वाञ्छ्यते भाववन्धे।
धन्यै [81]शस्तप्रकृतिभिरि[82]लाकम्प दियमुत्पाद्यः
प्रीत्युन्मादास्थिरमतिभिरादीयते वाहुयुद्धम्॥

५४ श्वो वीक्ष्य त्वां हृदि मम कृपा जायते प्रायशो यत्
कष्टं ते स्यान्मम प[83]दबिसालित्वसम्प्राप्तियत्ने।
[84]अश्रान्तासन्नयनयुगलीदिप्तिरेखावपात-
स्पर्धालुस्त्रीसमुदयकृता[85]दभ्रसम्मर्दभूम्ना॥

५५ भक्ते ! मा त्वं विभिहि-- 'कुपितात् क्षिप्यते शापवाणो
देवाच्चेत् किं करणमुचितं स्यान्ममे'-- त्यप्रगल्भा।
अस्मत्कीर्तिर्निखिलभुवनव्यापिका नीचकृत्य-
प्रीतस्वान्तेष्वभयवरदप्रायचेतः सरण्या॥

५६ हे वन्दा[86]रो ! रमणि ! युवते ! लञ्चदानैः परीक्षा-
सूत्तीर्णत्वं न भ[87]टगृह उद्घाटयते ते कदाऽपि।
प्रातः प्राप्स्यस्यभयवचनं वाढमस्मन्मुखाब्जा-
द्धीरो ! वाले ! कर[88]-ज-सुषमा-रञ्जितास्मत्पदाब्जा॥

५७ अन्यत् कन्ये श्रुणु तव पितुर्वेतनेऽल्पेऽप्यकष्टं
गेहान् निर्मापयति स कथं [89]राजराजाभिलाष्यान्?
एतन्मर्मप्रकटनवरे प्रार्थिते पूरयिष्ये
को वा देवो नतजनवरं सुप्रसन्नो न दद्यात्?॥

५८ प्राप्ते [90]रम्ये वयसि कतिचिच्छैशवं रोचयन्ते
कोकज्ञानां सुवचनमिदं चारितार्थ्यं दधाति।

आरा[91]द् रत्नं स्वयमुपनतं यत्तिरस्कृत्य चित्तं
मौढ्योपेतं निखिलदिशमुद्घोपयस्यात्तभेरी॥

५९ प्रायोऽन्यस्मिन्निहितहृदया त्वं जने प्रीत्यनर्हे
प्राक्पापीयं फलमनुभवस्यादराढ्यं त्यजन्ती।
नासाऽसह्यं जलमविमलं पूतिगन्धं लपन्त्याः
सूकर्याः किं भवति रसना पायसास्वादभव्या ?॥

६० टोप्युक्त्वैवं द्रुतमपसर क्रोधनाक्षेप्स्यमाणाद्
दण्डाच्छीर्षं यदि सखि ! निजं मन्यसे रक्षणीयम्।
आशीर्वादं श्रवणसुभगं वच्मि मत्कार्यसिद्धौ
मा भूत्ते शासयितुरनघे ! मस्तकाद् विप्रयोगः ॥

---

[1] आगस्कारिणी-कृतापराधा [2] चालः-श्वा वैजयन्ती ३-४-६९ [3] ब्रह्मकृत्यं-सृष्टिः। [4]भलुहौ-श्वानौ वैजयन्ती ३-४-७० [5] गृह्यको प्रमोदाय गृहे पालितः पशुः। [6] यक्षः-श्वा यक्ष इन्द्रमहश्वाक इति शुनकपर्यायेपु वैजयन्ती [7] मुत्-प्रीतिः प्रमदो हर्प इत्यमरः। [8] वां-युवयो [9] आरात्-दूरे [10] प्रशस्त्ये-उत्कृष्टत्वे [11] अश्रु-पदं विशेष्यम्। [12] वृष्ट्याकरेण [13] कमलस्यापि लज्जाकरे। [14] अक्षिणि सति। जात्येकवचनम् [15] हे स्तुत्यौ ! [16] मिलन्ति दाडिमवीजानि यया उपमा [17] दृश्याऽन्वेषणीया शोभा यैस्तैः। [18] वां-युवयो आक्रमप—— [19] वहल-निविड, घन। [20] यौवयं-युवयोर्भावः, अण् [21] भपणं [22] युवयोर्भाव डीप्। [23] पशूनां समवायः। [24] नर ईड्यौ-स्तुत्यौ। [25] प्रायेणाधुनिका धनिकाः शुनकान् पालयन्ति। [26] पशु आनतौ। [27] कम्पनशीलं चञ्चलमिति यावत्। [28] युवयो भावः+ङस्। अत्रोत्प्रासो (Irony) कद्रष्टन्यः। [30] Candidature. [31] कर्णे। [32] मार्गं। [33] कौलेयकः-श्वा छः। [34]प्रशस्तशिलाखण्डादीनां लमुदायस्योपयोगेन [35] रहस्यमेतद्विपयगतं [36] भवती+ऊर्ध्वधीः-उन्नतवुद्धिः सती [37] अत्र हेतौ पञ्चमी। [38] अण्+ङसि। [39] सूर्यः। [40] इदानीमपि [41]

ज्योक्-सदा [42] इच्छतां (लोट्+तस्) [43] अन्तरिक्षे [44] प्र+अग्र+प्यञ्-प्राशस्त्यम्। [45] अयं भावः-त्वदीयदण्डस्य वज्रायुधसदृशत्वात्तस्य च वज्रायुधस्य भुव्यवतरणे कारणं त्रिधा विकल्प्यते लोकैः—१ शापाद्भ्रंशः २ आवहो कालादिन्द्रसेवाकरणजनिते वैरक्यं ३ भूमिदर्शनकौतुकम्। [46] मा+उपसंहारकृत्त्वं [47] मा+अपि+इन्दुः। [48] दूरम् (दुष्प्रापमिति यावत्।) [49] क्षेत्रियच् परिक्षेत्रे चिकित्स्य इति सूत्रस्थकाशिकादर्शने क्षेत्रेपु जायमानमनवश्यं सस्यं (कळे इति भापायां) इत्यर्थे मयायं शब्दोऽत्रं प्रायोजि। [50] सचिवपदवीं [51] आदि+अद्मरस्य (अति भक्षणशीलस्य) [52] वृद्धेति द्रष्टॄणां भ्रमजनने पटुतरां तां नत्वेत्यन्वयः। [53] दाम्भिकानां श्रेष्ठो यथा नमति तथा। उपमाने कर्मणि च ३-४-४५ इति णमुल्। [54] नवनीतस्य भावः। प्यञ्। [55] स्मित+छः। [56] वृक्षसमुदयः। [57] ब्रह्माणं [58] हल+एति–प्राप्नोतीति यावत्। [59-60] उभयत्र पञ्चमी विभक्तिः। [61] काकः। [62] आगस्वान्–अपराधी। [63] अत्र सतिसप्तमी। [64] चन्द्रः। [65] अमावास्यायाम्। [66] अत्र जात्येकवचनम्। [67] अयं भापः–त्वं निरक्षराऽसि। [68] निन्दा। [69] जलम्। [70] पदव्यनर्हता। [71] सुष्ठु ज्ञानं यस्यास्तत्सम्बुद्धौ [72] विश्वविद्यानिलये प्रवेशः। [73] डकायित इति हिन्दी शव्दशऽयं डा० वीरभद्रमिश्रेण सर्वगन्धायां प्रयुक्तपूर्वः। स्वार्थिकः कः। [74] क्लेशवती [75] आगः + (आगस्ती-अपराधः) कारणात् [76] पश्चात्तापयुक्तमनसि [77] हे सुन्दरि। [78] कान्तिहेतोः। [79] श्वेताः। [80] केशाः (प्रणतिकारणात्) [79] प्रशस्त— [80] भूमि— [81] पदकमलयो भृङ्गत्वप्राप्तये यत्नस्तिक्मिन्। [82] अविश्रान्तं-अनवरतमिति यावत्। [85] अधिकं [86] प्रणतिशीले। [87] In the police station. [88] नखशोभाकारणात् कृत-मत्पाद-रक्तवर्णा। एतच्च त्वद्भक्तेन मम पादस्पर्शकारणात्। [89] कुवेरवाञ्छनीयान्। [90] रम्ये वयसीति लक्षणया यौवने [91] समीपे (आराद्दूरसमीपयोरिति कोशः।)

शास्त्रपादः

# पातञ्जलयोगकारिकाः

विद्वान् एन् एस् रामभद्राचार्यः, मैसूरु

१ महायोगी च योगज्ञः योगेश्वरपदे स्थितः ।
योगादाता च योगीशः श्रीरङ्गो जयति स्वयम् ॥

२ शारीरमलनिहन्ता मानसदोषापहा नित्यम् ।
वाचां शुद्धिकृदार्यः पतञ्जलिर्भारतो जीयात् ॥

३ योगस्त्वात्मसकाशात् आविर्भूतः प्रवर्तितो मुनिभिः ।
नष्टः कालविपाकात् भूयस्त्वेवानुशिष्यते लोके ॥

४ चित्तस्य वृत्तयो हि वक्ष्यन्ते या विशेषतः सर्वाः ।
तासामेव निरोधो योगो ज्ञेयस्सुधीभिरिह शास्त्रे ॥

५ यस्मिन् काले चैत्ताः निरोधिता वृत्तयो निखिलाः ।
तस्मिन्नेव तु काले द्रष्टुः कैवल्यतोऽवस्था ॥

६ समयो यस्मिन् चैत्ताः न निरुद्धा वृत्तयः काश्चित् ।
अखिले तस्मिन् काले वृत्तिसरूपत्वमाश्रितो द्रष्टा ॥

७ भेदा वृत्तीनां हि पञ्च प्रोक्ता मनीषिभिर्योगे ।
प्रत्येकं यासाञ्च क्लिष्टाक्लिष्टत्वमुच्यते सद्भिः ॥

८ या वृत्तयस्तु योगे निरन्तरं चान्तरायतां यान्ति ।
ताः क्लिष्टाः परिकथिताः,तास्त्वनुकूला भवेयुरक्लिष्टाः ॥

९ वृत्तय एताः पञ्च प्रमाणनाम्नी विपर्ययाख्या च ।
वैकल्पकी च निद्रा स्मृतिस्तथोक्ता समाधितत्वज्ञैः ॥

१० तत्र प्रथमा वृत्तिः प्रमाणनाम्नी त्रिधाख्याता ।
दृष्टं लैङ्गिकमेवं तथाऽऽगमो योगशास्त्रेऽस्मिन् ॥

११ आन्तरबाह्याभिख्यैः ज्ञानं यच्चैव जायते ह्यक्षैः ।
वृत्तिः सा दृष्टाख्या कथिताद्या योगशास्त्रज्ञैः ॥

१२ अवलम्ब्य प्रत्यक्षं ह्यप्रत्यक्षस्य वस्तुनो ज्ञानम् ।
व्याप्तिज्ञानाधीनं कथितं त्वनुमानमार्यैश्च ॥

१३ वचनादेवाप्तानां पुंसां यच्चैव जायते ज्ञानम्।
प्रत्यक्षादनुमानादतिरिक्तं त्वागमाभिख्यम्॥

१४ यदवृत्ति यच्च रूपं प्रतिष्ठितं तत्र चैव यज्ज्ञानम्।
सा मिथ्याज्ञानाख्या विपर्ययो वृत्तिराख्याता॥

१५ केवलशब्दात्पुंसां विषयविहीना तु जायते या धीः।
कथिता विकल्पनाम्नी वृत्तिस्तार्तीयिकी सेयम्॥

१६ ज्ञानाभावज्ञानं त्वालम्ब्यते वै यया वृत्या।
सा वृत्तिः शास्त्रेऽस्मिन् निद्रानाम्नी समाख्याता॥

१७ अनुभूता ये विषयाः वृत्तिभिराभिस्तु पञ्चभिर्द्रष्ट्रा।
अतिरोहितता तेषां स्मृतिनाम्नी वृत्तिराख्याता॥

१८ अभ्यासाद्वैराग्यात् पूर्वोक्तानाञ्च वृत्तीनाम्।
क्रियते यश्च निरोधः स ह्यादौ योग इत्युक्तः॥

१९ तत्राद्यश्चोपायः स्थितौ निरोधे वितन्यते यत्नः।
यः साधकेन योगे स कथ्यतेऽभ्याससंज्ञो हि॥

२० आ च वहोः कालाद्यः निरन्तरञ्चैव सेवितः प्रीत्या।
साधकवर्त्यभ्यासः दृढतामाप्नोति कार्यकारी च॥

२१ द्विविधं तद्वैराग्यं परमपरं चेति धर्मभेदेन।
ज्ञेयं ह्यपरं त्वादौ परन्तु वैराग्यमुच्यते पश्चात्॥

२२ दृष्टा आनुश्रविका इति लोके द्विधा स्थिता विषयाः।
तृष्णां विहाय तेषु च चित्तस्थितिर्वशीकारवैराग्यम्॥

२३ प्रकृतेः पुरुषस्यापि च विवेकतो जायते यद्धि।
त्रैगुण्ये वैतृष्ण्यं तत्परवैराग्यमुच्यते सद्भिः॥

२४ योगो द्विविधः प्रोक्तः सम्प्रज्ञातस्तथा तदितरश्च।
सम्प्रज्ञातो योगः चतुर्विधः प्रोच्यते हि शास्त्रेऽत्र।
सवितर्कः सविचारः सानन्दश्चास्मितानुगत एव॥

२५ परवैराग्याज्ञातः विरामनामा प्रत्ययो यश्च।
तस्याभ्यासाज्ञातः संस्कारशेषस्तदन्ययोगः स्यात्॥

२६ पूर्वस्मिन् जन्मनि ये स्थितिं विदेहां, प्रकृतिलयनाम्नीम्।
लब्ध्वा विसृष्टदेहाः स्यात्तु भवस्तत्र कारणं तेषाम्॥

२७ य इदम्प्रथमास्तेषां सिद्धावप्रज्ञातसंज्ञयोगस्य।
श्रद्धावीर्यस्मृतयः प्रज्ञाहेतुः समाधिनाम्नी च॥

२८ येषां तु साधकानां तीव्रे त्वभ्यासवैराग्ये।
आसन्नस्त्वेवैषां निर्वीजाख्यस्समाधिराम्नातः॥

२९ साधनमात्रा त्रिविधा मृद्वी मध्या तथाधिका चैव।
अनुसृत्य तां च तेष्वपि मिथो विशेषः प्रवर्तितो ज्ञेयः॥

३० प्रणिधानमीश्वरस्य च पूर्वोक्तेभ्यश्च योगहेतुभ्यः।
निर्वीजाख्यसमाधौ कारणमुक्तं सुशीघ्रतरम्॥

३१ क्लेशाः कर्माण्येवं विपाक एषां तथाशयश्चैव।
अविनाभावानैते जीवानाश्रित्य भाविनो निखिलान्॥

३२ सर्वैर्दोषैरेतैः भववीजैर्योऽपरामृष्टः।
पुरुषविशेषः सोऽयमीश्वररशब्देन वोध्यते शास्त्रे॥

३३ सर्वातिशायि यस्मात् ज्ञानं यस्मिन् परे त्वीशे।
तस्मात् सर्वज्ञत्वं प्रतिष्ठितं वै स्वतस्तस्मिन्॥

३४ व्रह्माद्या देवा ये पूर्वे ये चर्षयः सर्वे।
तेषामपि गुरुरेष नैव यतः कालतो ह्यवच्छिन्नः॥

३५ तस्यैव वाचकोऽयं सन्दृष्टो योगिभिस्तु पूर्वैर्यः।
स प्रणवो वेदादौ वेदान्ते च सम्यगाम्नातः॥

३६ यः प्रणवस्य जपो यद्भावनमपि वा तदर्थभूतस्य।
प्रणिधानं तज्ज्ञेयं ह्युक्तो हेतुश्शुभोऽन्तिमे योगे॥

३७ उक्ताभ्यां हेतुभ्यां धीः प्रत्यक्चेतनस्वरूपस्य।
विघ्नानामखिलानामत्यन्ताभावसिद्धिश्च॥

३८ देहादिगतो व्याधिः साधनकृत्ये निजेऽप्रवृत्तिश्च।
फलसिद्धौ सन्देहः प्रमादसत्त्वं तथालस्यम्॥

३९ विषयेष्वत्यासक्त्या विरत्यभावस्तथा चित्ते।
भ्रान्त्याख्यदर्शनमप्यलब्धभूमित्वमनवस्थितत्वञ्च॥

४० विक्षेपाश्चित्तगताः विघ्नाः विक्षेपसहभुवश्चैव।
दुःखं च दौर्मनस्यं कम्पप्रश्वासकश्वासाः॥

४१ प्रत्यूहानामेषां विनिवृत्त्यै साधकेन तद्वेत्रा।
अभ्यासस्त्वेकस्मिंस्तत्वे साध्यो निरंतरः पुंसा॥

४२ सुखवति देहिनि मैत्री, दुःखिनि करुणा, शुभात्मके मुदिता।
पापिनि चैबोपेक्षा भावयितव्या दिवा-निशं सुधिया॥
४३ भावनया चैतासां प्रसादनं भवति चित्तस्य।
येन च रागादीनां चित्तमूलानां विनाशनं सुलभम्॥
४४ प्राणाख्यस्य च वायोः रेचनतोऽथापि धारणाच्चैव।
नार्डीचित्तमलानि हि नाशमशेषेण यान्ति च क्रमशः॥
४५ नैरन्तर्याभ्यासात् विषयवती च प्रवृत्तिराम्नाता।
दिव्या विषया यस्यां योगिभिरेवानुभाव्यतां यान्ति॥
सा चोत्पन्ना मनसः स्थितिवन्धं साधितुं प्रभवेत्॥
४६ साधननैरन्तर्यात् व्यपगतशोका तु जायते वृत्तिः।
ज्योतिष्मतीति-नाम्ना चित्तगता वा प्रवृत्तिरास्थेया॥
४७ पुरुषे यस्मिन्शुद्धे रागा नष्टाः स्वभावतः सर्वे।
तद्ध्येयतां प्रपन्नं चित्तमुपायेन सुस्थिरं भवति॥
४८ यच्च स्वाप्नं ज्ञानं दैवविभूत्यादि तत्त्वसंस्पर्शि।
तच्चिन्तनतोऽविरतं चित्तनिरोधो भवेदनायासाद्॥
४९ निद्रायां च प्रोक्ता तस्यां या विषयशून्यता सत्वात्।
तामेवानुध्यातुर्निरन्तरं मनोनिरोधः स्यात्॥
५० स्वनिसर्गाभिमतं यत् यत्स्मरणेनापि चित्तनैर्मल्यम्।
तत्तद्विषयध्यानादपि चित्तं सुस्थिरं भवति॥
५१ सूक्ष्मतरं सूक्ष्मतमं गच्छति सूक्ष्मे निवेशितं चित्तम्।
तेन च परमाण्वन्तं गच्छेच्चित्तं वशीकृतं शीघ्रम्॥
५२ स्थूले निवेशितं च स्थूलतरं महत्तमं चैव।
गच्छेत् सुखेन चित्तं ह्यप्रतिघातेन गगनकालादि॥
५३ एवं वशीकृतं तच्चेतो ह्यभ्यासपाटवाधानात्।
भूयो नैव निरीक्षेताभ्यासायाससंभ्रमं योगे॥
५४ उक्तादुपायजातान्मनसो या क्षीणवृत्तिता भवति।
सा चित्तस्य ग्राह्ये स्थूले सूक्ष्मे च तत्स्थतां कुरुते॥
५५ तत्रैव तं जनतां या चोक्ता तत्समापत्तिः।
तत्स्थत्वं चैकाग्र्यं ग्राह्यादभ्रष्टतारुपम्॥
ग्राह्ये तु तदञ्जनता तन्मयता प्रोच्यते कृतिभिः॥

# न्यायपदार्थमाला

डा वि रामकृष्णभट्टः, कालडी

१ निरूप्यन्ते पदार्था ये न्यायशास्त्रविचारिताः ।
द्रव्याद्यन्यतमाः सिद्धा अपवर्गप्रयोजकाः ॥

२ ज्ञेयो मेयः पदार्थश्च वस्तु नामानि वै खलु ।
तेषामेव प्रवोधाय यत्यतेऽत्र स्वशक्तितः ॥

३ द्रव्यत्वं तु भवेद्व्याप्यं मेयत्वं व्यापकं दृढम् ।
यथा व्याप्यं गुणत्वं तु कर्मत्वादि तथा भवेत् ॥

४ लक्षणं तु पदार्थानामुक्तञ्च न्यायसूरिभिः ।
यथार्थधीगोचरत्वं ज्ञेयं तल्लक्षणान्तरम् ॥

५ अस्तित्वमथवा वोध्यं विषयत्वं तृतीयकम् ।
इच्छानिरूपितं तत्तु केशवस्येति तन्मतम् ॥

६ साकारस्यैव वस्तुत्वं लोके तावत्प्रसिद्ध्यति ।
आकाररहितस्यापि शास्त्रे तत्प्रतिपाद्यते ॥

७ यथारूपरसादीनां मेयत्वं साध्यते वुधैः ।
वस्तुत्वेन प्रगृह्यन्ते आकाररहिता अमी ॥

८ वाच्यत्वमभिधेयत्वं प्रमेयत्वं तथैव च ।
ज्ञेयत्वमस्तिता चेति सर्ववस्तुषु विद्यते ॥

९ पञ्चस्वभ्रादिकेष्वेव तथैव परमाणुषु ।
विशेषः समवायेन अस्तीत्याहुर्मनीषिणः ॥

१० द्रव्यत्वस्य गुणाः सन्ति व्यापकास्तु न च क्रिया ।
सामान्यं समवायश्च व्यापकस्तस्य सम्मतः ॥

११ गुणत्वभिन्नं कर्मत्वं तयोरस्ति च जातिता ।
सामान्यत्वमभावत्वं न च सामान्यरूपकम् ॥

१२ क्रिया नास्ति गुणो नास्ति विशेषो नास्ति वै खलु ।

गुणादिषु पदार्थेषु शास्त्रज्ञानामिदं मतम् ॥

१३ अजातिस्समवायत्वं विशेषत्वं तथैव च ।
समवेतं तु सामान्यं नित्यञ्चेति प्रकीर्तितम् ॥

१४ वहवश्च गुणाः सन्ति सन्ति कर्माणि पञ्च च ।
समवायस्त्वेक एव विशेषाः सन्त्येनेकधा ॥

१५ अभावरूपं यद्वस्तु शास्त्रेऽस्मिञ्चरमं स्मृतम् ।
चतुर्विधं तु तद्वस्तु सामान्यं तु विभिन्नकम् ॥

१६ जातिश्च समवायेन कर्मान्तेषु च वर्तते ।
समवेतो गुणो द्रव्ये समवेतञ्च कर्म च ॥

१७ सर्वेषामाश्रयः कालः कालिकेन प्रकीर्तितः ।
तादात्म्येनैव हि द्रव्यं जनकं गुणकर्मणोः ॥

१८ द्रव्यस्यापि च जन्यस्य कारणं द्रव्यमेव हि ।
मञ्चे च कुण्डसम्वन्धः संयोग इत्युदीर्यते ॥

१९ ज्ञानं तु विषयत्वेन सम्वन्धीत्यभिधीयते ।
प्रमेयत्वादयो धर्माः स्वरूपेण च वृत्तयः ॥

२० संयोगः समवायश्च कालिकश्च प्रकीर्तितः ।
स्वरूपश्चेति सम्वन्धाश्चत्वारः सन्ति केवलम् ॥

( अनुवर्तते )

ooo

विमर्शपादः

# औचित्यमहिमा

कवितल्लजः शिरोमणिः ना वेङ्कटरमणः, तञ्जावूरु

संस्कृतविद्यासमितेः कविरङ्गेऽहं नवीनकवितां मे।
दास्ये विदुषां प्रीत्यै प्रत्यौचित्यं सुरोक्तिकाव्येषु॥
श्रोत्रानन्दैर्यमकमधुरैः प्रासयुक्तैश्च शब्दैः
छन्दःशास्त्रे विहितनियमैः श्लोकनिर्माणमेव।
कष्टं सन्तः! सुरवचसि भोः? नैकवृत्तानुसारं
कुर्वे यत्नं लघु कवयितुं सद्गुरोर्हि प्रसादात् ॥ १ ॥
दण्डी सत्पदगुम्फनं सुललितं काव्यं वरं मन्यते
निर्दोषं सगुणञ्च काव्यमतुलं प्रोचे कविर्मम्मटः।
साध्वर्थं रमणीयकञ्च वदति श्रीमज्जगन्नाथसन्
श्रीविद्याधरपण्डितस्य च मते शब्दार्थकायं हि तत् ॥ २ ॥
वाच्यार्थाद्धि विलक्षणं कमपि यद् व्यङ्ग्यार्थमातन्वते
काव्यस्यात्मतया ध्वनिं भणति तच्चानन्दसंवर्धनः।
वाक्यं चारु रसादिमच्छ्रुतिसुखं संवक्ति शौद्धोदनिः
वाक्यं नैकरसात्मकं कथयति श्रीविश्वनाथोऽप्यहो ॥ ३ ॥
आलङ्कारिकतल्लजा बुधवराः काव्यस्य सल्लक्षणं
कामं यत्किमपि ब्रुवन्तु च तथा काव्यात्मनो निर्णयम्।
कुर्वन्त्वत्र न मेऽस्ति वादविषयः सर्वं हि मे सम्मतं
काव्यास्वादविधौ कथं ह्युपकृतिं पुष्णाति किञ्चिज्ज्ञता ॥ ४ ॥
कालं देशपरिस्थितिं जनरुचिं पात्रं कथावस्त्वपि
प्राञ्चस्ते स्वनुसृत्य नैजरचनामौचित्यसंयोचिताम्।
कृत्वा प्रापुरथो नु कीर्तिममितामित्यत्र किञ्चिन्मया
सन्दर्भैः सुनिवेद्यते बुधजनप्रीत्यै मुदा सादरम् ॥ ५ ॥

गोष्ठ्यां गौतमकुंभजादिमहतां शास्त्रार्थवादान् कविः
नीलग्रीवमखी ददौ सुमधुरं राज्ञोऽश्वमेधे सवे।
हर्षस्त्वास्तिकसन्मतं कलिमुखात् सन्दूषयन्नैषधे
शक्रास्यात् तदनन्तरं नययुतं प्रादात् सुयोग्योत्तरम् ॥ ६॥

भोजो रामविलापवर्णनमहो त्यक्त्वा स्वचम्वां मुनिं
वाल्मीकिं हि कठोरचित्तमभणद्वल्मीकभूम्युद्भवात्।
एवं रावणजल्पितं स्ववचसा वक्तुञ्च नैच्छन् सुधीः
नीचां कापुरुषोक्तिमेव तदपि ब्रूते स्म युक्तं रसात् ॥ ७॥

रामेणाचरितं मृगानुसरणं प्रीत्यै पितॄणामिति
श्रीभासो निजरम्यनाटकपतेर्दोषन्नु गोपा[illegible]।
इत्थं दुर्वसनागमं, मुनिकृतं शापञ्च [illegible]कुन्तलं
संयोज्योत्तमनायकञ्च कुरुते दुष्यन्तमार्यः कविः ॥ ८ ॥

ऐक्ष्वाकं रघुमेत्य निष्फलतया मा गच्छ कौत्सेति या
वागुक्ताऽन्यवदान्ययाचनमल [illegible]रुध्वा नृपेणादरात्।
तस्यार्थो ननु को भवेत् कविमणेः श्रीकालिदासस्य भोः!
सत्काव्ये सति सर्वशास्त्रविषये किं वाऽन्यमीयाद्बुधः ॥ ६ ॥

विशुद्धामेकां यः कलयति कलां दिव्यमकुटे
गिरीशख्यातिं यद् भजति गिरिशो वेदवचसि।
समासोक्त्या ह्येवं भणति कविसिंहः किमिति भोः
भवेत्सर्वाभिज्ञो भुवि यदि सुरोक्तौ कुशलता ॥ १० ॥

पार्वत्या जनने गिरीशहिमवान् पूतश्च संभूषितः
संस्कारैधितसद्गिरेव विबुधः प्राहेत्थमार्यः कविः।
पूर्णः संस्कृतभाषयैव मनुजो नानोक्तिविज्ञोऽपि सन्
इत्थं देववचः प्रशस्तिमकरोद्गूढोक्तिपूर्वं कृती ॥ ११ ॥

काव्ये स्वे गुहसंभवे कविपिको वर्णप्रकर्षं मधौ
निर्गन्धं बनकर्णिकारकुसुमं दृष्ट्वा भृशं दुःखितः।

इत्येतद्विषयो व्यनक्ति मनसो भावं कवेरूर्जितं
वर्णालङ्कृतिरेव माऽस्तु जडधीः ! अर्थो हि गन्धावहः ॥१२॥
वागीशानपि कुर्वते खलगिरो मूकांस्तु माघं ध्रुवं
काव्यं यः श्रयते प्रसन्नमनसा मूर्खं सुवाचञ्च तम्।
एवं स्वाशयमेव रामवचसा प्रोचे सभायां कविः
माघः स्वे शिशुपालपूर्वहनने काव्ये सुगूढार्थकम् ॥ १३ ॥
लब्धुं सर्वजनप्रियं शठमतिः काङ्क्षन् हि दुर्योधनः
राज्यं धर्मपथात् स्म शासति छलादित्थं कविर्भारविः।
ब्रूते नैजकिरातपार्थचरिते काव्योत्तमे सुन्दरं
सच्चारस्य वनेचरस्य मुखतो धर्मेण पृष्टस्य वै ॥ १४ ॥
श्रीवाल्मीकिमनःसरोविगलिता रामायणस्वर्णदी
शब्दार्थद्वयतीरशोभितगतिः श्रीरामचन्द्राब्धिगा।
पुण्या दिव्यरसोदका ध्वनियुता प्राज्ञौघसभ्यार्थिता
तापघ्नी वत भारते प्रवहति स्वौचित्यगर्भोज्ज्वला ॥ १५ ॥
औचित्यमहिमा काव्ये संस्कृते शोभतेतराम्।
इत्युक्त्वा विरमाम्यार्याः जीयात् पण्डितमण्डली ॥ १६ ॥

---

प्रकीर्णपादः

# स्तुतिकदम्बकम्

---शतावधानी रा गणेशः

*वाणीस्तुती*

श्रीकाराकारकर्णद्वयनिकटनटत्कुन्दमन्दारगन्ध-
स्पन्दस्वीकारसान्द्रप्रणवगुणरणन्मञ्जुगुञ्जा मिलिन्दाः ।
केकीभोद्गारधाराध्वनि घनगतिमझ्झञ्झळन्नूपुराणां
सध्र्यञ्चस्वानहंसस्फुरदसितदृशोः स्पर्धिनः पान्तु वाण्याः॥

विश्वव्यापि कलाकलापि कविताप्रख्यापि सर्वङ्कष-
प्रेक्षावापि सिताम्बुजातसुषमाप्रक्षेपि दुर्लोपि च ।
वीणालापि विनेकरूपि विपदे व्याकोपि मच्चित्यथो
विद्याप्रापि महस्सदापि लसतु स्वर्मापि नः श्रेयसे ॥

*हरिहरस्तुती---*

वटदलगं वटतलगं तोकं युवकं सलीलमतिमौनम् ।
वनदे सच्चित्सुन्दरमानन्दं कमपि माकन्दम् ॥

कालीयफणफलके कैलासशिलालिफालतलशलके ।
नृत्यन्तं विपधरहरमपि विपधरधारमहं वन्दे ॥

*शारदास्तुतिः--*

वाणिनीव कलावाणी स्रग्विणी मञ्जुभाषिणी ।
दद्यादद्यापि नः स्फूर्तिं रुचिरा प्रमिताक्षरा ॥

*श्रीकृष्णस्तुती--*

मधुरमुरलिकाप्तं पाञ्चजन्यप्रदीप्तं
शरदि युवतिलुप्तं युद्धगीतार्थक्लृप्तम् ।
अनवरतमलिप्तं भक्तसंवेगतप्तं
श्रितजनहृदि सुप्तं भावयेऽहं त्वदृप्तम् ॥

दरहसितविलासं दिव्यसौन्दर्यभासं
मधुरमतिमतासं धर्मवर्मप्रभासम्।
जनवनमधुमासं सर्वकर्माप्रयासं
कृतयतिवरदासं चिन्तये चन्द्रहासम् ॥

*शिवस्तुती--*

स्वाक्षिपावकपुटे परिष्कृतं धर्मगोचरशरीरकान्तितम्।
यश्चकार मदनं महामृतं शं करोतु स तु नीललोहितः ॥
गौरीपरीरम्भरसप्रदीपितः प्रारम्भ एवामरवाहिनीरसैः।
निर्वापितो मत्सरिभिर्जटाकुटैःपायादपायान्निरूपायनायकः॥

*गणपतिस्तुतिः---*

द्वैपायनस्य वचनायनचिद्रहस्य-विद्याविभाविविदिपुर्विजयाय भूयात्।
जिघ्रन्निव प्रथितभारतकाव्यकर्मा शुण्डाग्रतः शुभकरेभमुखो महात्मा॥

# चित्रं हि तच्चेष्टितम्

*विद्वान् उमाकान्तभट्टः, मेलुकोटे*

स्मेराननं स्मरकथां मुहुरालपन्तं कान्तं करात्तकमनीयकुचोत्तरीयम्।
दृष्ट्वा निमीलितविलोचनकं विरेजे राकाशशाङ्कसदृशं वदनं सुदत्याः ॥ १ ॥
तन्व्या निशीथसमये पिहिते कवाटे ज्योत्स्ना यदापि विसृता कृतहर्म्यजालैः।
भीतेव सा चिरकलङ्कितचन्द्रजारात् भर्तुर्वभूव भुजपञ्जरसन्निविष्टा ॥ २ ॥
रम्यं रसालतरुणं सुदृढं परीताम् पुष्पैः सुवासिततनुं गिरिमल्लिकां ताम्।
तन्वी तु भूतलगतामिव दर्शयन्ती गाढं तनुं प्रियकरस्य च लिङ्गति स्म ॥३॥

कान्तायाः कुचचूचुकं प्रियकरस्मृत्या तु पीनोन्नतम्
जम्बूकभ्रमचोदितेन तरसा चञ्चूपुटेन स्वयम्।
दष्ट्वा तत्करपल्लवेऽनवहितं लीलाशुकः खेलकः
रोमाञ्चं सुदतीतनौ वितनुते चित्रं हि तच्चेष्टितम् ॥ ४ ॥

# मुकुन्दं भजे

*कृष्णदत्तः शर्म्मा शास्त्री,* जवाहरगञ्ज्

श्रीधवं माधवं मोहमायाहरम्, गोकुलाधीश्वरस्यात्मजं मोहनम्।
पद्मपत्रेक्षणं कोमलं निर्मलम्, नित्यमानन्दकन्दं मुकुन्दं भजे॥ १॥
देवकीनन्दनं वासुदेवं हरिम्, नन्दजं यादवं वै यशोदात्मजम्।
कुञ्चितैः कुन्तलैः शोभमानाननम्, नित्यमानन्दकन्दं मुकुन्दं भजे॥
शंखिनं चक्रिणं कौस्तुभालंकृतम्, अच्युतं कृष्णदामोदरं केशवम्।
निर्विकारं सदा निर्गुणं निर्भयम्, नित्यमानन्दंकन्द मुकुन्दं भजे॥ ३॥
वंशिकावादकं रासकेलिप्रियम् वालगोपालगोगोपिकावल्लभम्।
वन्यया मालया शोभितोरःस्थलम् नित्यमानन्दकन्दं मुकुन्दं भजे॥ ४॥
भानुपुत्रीतटे धेनुवृन्दानुगम्, गोपवृन्दान्वितं मित्ररक्षाव्रतम्।
भक्तसंरक्षणे सर्वथातत्परम् नित्यमानन्दकन्दं मुकुन्दं भजे॥ ५॥
पूतनाकेशिचाणूरसंहारकम्, कंसजीवान्तकं भक्ततापान्तकम्।
द्वारकानायकं यादवेन्द्रं विभुम्, नित्यमानन्दकन्दं मुकुन्दं भजे॥६॥
सत्यभामाप्रियं रुक्मिणीसेवितम्, गोपगोपीप्रियं राधिकाराधितम्।
श्रीपतिं श्रीधरं श्रीनिधिं श्रीभवम्, नित्यमानन्दकन्दं मुकुन्दं भजे॥७॥
पापनिध्वंसिनं धर्मसंस्थापकम्, पाण्डवानां हितं द्रौपदीरक्षकम्।
योगविद्यागुरुं मोक्षदं ज्ञानदम्, नित्यमानन्दकन्दं मुकुन्दं भजे॥८॥

# सङ्गमस्थलशारदाम्बासुप्रभातम्

*एन् के सुन्दरेश्वरन्, कालडी*

मातस्त्वदागतमिदं जगदाविरिञ्चं तिष्ठत्यशेषमवितं हि तवैव शक्त्या।
त्वय्येव तल्लयमुपैष्यति चान्तकाले तां त्वां त्रिलोकजननीं शरणं प्रपद्ये॥
धर्मस्य मार्गमथ कर्मगतिं विचित्रां तत्त्वस्य मार्गमुत वाप्यथ भक्तिमार्गम्।
जाने न किञ्चिदिह किन्त्वरणं गतोऽस्मि तं मामनन्यशरणं परिपाहि नित्ये॥

मूर्तित्रयेण विनुते त्रिगुणात्मिकेऽम्ब देवि त्रयीं तव तनूंकथयन्त्यभिज्ञाः ।
योगत्रयस्य शिवदे त्वमथैकलक्ष्यं कालत्रयेऽपि मम मङ्गळमातनु त्वम् ॥३॥
यद्ब्रह्मतत्त्वमविचिन्त्यमदृश्यमाहु स्तत्तावदक्षिविषयं भवतीति कृत्वा ।
त्वन्मूर्तिदर्शनसमुत्कजनास्त्वरन्ते तान् द्राक् पुनीहि करुणार्द्रदृशा त्वमम्ब ॥४॥
भास्वानुदेत्ययमदस्तिरयन् सुशीघ्रं अन्तर्वहिःस्थमखिलं हि तमःप्रपञ्चम् ।
सञ्चोदयन् सकललोकमखण्डभूत्यै श्रीशारदेऽम्ब भवतात्तव सुप्रभातम् ॥५॥
विप्रप्रियेऽत्रिमुखसप्तऋषिप्रपूज्ये मित्रात्रिपुत्रकृतकर्णवतंसरम्ये ।
रात्रिन्दिवं जगदनुग्रहजागरूके क्षिप्रप्रसादनपरे तव सुप्रभातम् ॥ ६ ॥
इन्द्रादिदिक्पतिनुते शिवदे शरण्ये चन्द्रार्कहव्यवहकल्पितदृष्टिरम्ये ।
वन्दारुवन्द्यचरणाब्जयुगे विधात्रि भद्रातटीनिलयने तव सुप्रभातम् ॥७॥
निष्कामकर्मकरणादपि दुर्गमार्गात् तत्त्वप्रचिन्तनपथादपि धीरगम्यात् ।
तावत्कभक्तिपथमेव मनोज्ञमाहुः त्वत्प्राप्तये मुनिवरास्तव सुप्रभातम् ॥८॥
"अङ्गं हरे" रिति पुरा गुरुरस्तवीत्त्वां भङ्गाय विप्रगृहिणीजननिःस्वतायाः ।
गङ्गाप्रवाहसदृशं तपनीयवर्षं तुङ्गं चकर्थ वरदे तव सुप्रभातम् ॥९॥

# कृतज्ञताञ्जलिः

*विद्वान् के एस् भास्करभट्टः*

विनतविपुलशिष्या वेदवेदान्तवोधि-
न्यनुगतकविवर्याचार्यलब्धप्रतिष्ठा ।
जयति विबुधभाषापाठशाला पुराणी
यदुगिरिरिति पुण्ये धाम्नि नारायणीये ॥
निखिलजनहितार्थं सम्भृतो यो भवद्भिः
सहृदयजनचित्ताराधकोऽभूदपूर्वः ।
अनितरसुखसारः संस्कृतस्योत्सवोऽयं
स्मृतिपथमुपनीतः सोऽन्तरङ्गंधिनोति ॥
परिणतकृतशिक्षाः संस्कृतस्योत्सवेऽस्मिन्

विलसदमृतवाणीज्ञानदिव्याङ्कुराभाः ।
सहजमधुरभावाः कन्यका दीपहस्ताः
प्रतिपदमनुगानं लास्यलीलां वितेनुः ॥ ३ ॥
वयसि वचसि वृद्धाः श्रीनिवासा अैरयर्
मनसि किल युवानः संस्कृतोत्कर्षकार्ये ।
मुनय इव सुशान्ताश्चासनाध्यक्षपीठे
सदसि सदुपदेशां श्चक्रुरुत्तेजितार्थान् ॥ ४ ॥
अमरवचनशालाप्रांशुपालाः कृतिज्ञाः
सरसकवनविज्ञाः पञ्चभाषास्वभिज्ञाः ।
प्रणिजगदुरथोपाध्यायधुर्या नयज्ञाः
मयि च परिमितज्ञे गौरवस्वागतोक्तीः ॥
व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः न
खलु वहिरुपाधीन् प्रीतयः श्रयन्ते
इति कविवचसा वस्तोलयन्नातिथेयीं
कृतिमहमधमर्णश्चास्मि सद्भ्यो भवद्भ्यः ॥ ६ ॥

# समस्यापूर्तिः

१ *सर्ववश्यः कृतान्तः*

आलोकालोकलोकान्निजविधिनियतान् हन्त नेनीयमानः,
स्वन्तं, मा भूत्परस्तादित उनयनगो दक्षिणोऽसौ कृतान्तः ।
त्र्यन्तानां तु सच्चित्सुखमयतनुतां जन्मिनां निर्णयन् विद्-
वित्तं सन्नुत्तरोऽयं हृदि वसतु सदा सर्ववश्यः कृतांतः ।
(स्वन्तो हि कालमृत्युः स्यात् नयनगो दृष्टिगोचरः ।
सर्वे वश्या यस्य सोऽयं सर्ववश्य इतीर्यते ॥)

*श्रीपाददीक्षितः शं तापसः,* मुळगुन्द

लुण्टाकाश्चोरवीरा प्रकृतिरथमहावाहनान्यच्छिरांसि
प्राणान्नित्यं हरन्ति प्रसभमधिकृतःस्वेच्छयेवान्तकस्य ।

भ्रष्टाचारप्रभावो भुवमिव दिवमप्यात्मना व्याप्य तस्था-
वुत्कोचादानलोभात् कृत इव स विभुः सर्ववश्यः कृतान्तः ॥

*विद्वान् के एस् भास्करभट्टः,* भीमनकोणे

सर्ववश्यः कृतान्तो न, वश्यस्सर्वेश्वरस्य तु ।
सर्ववश्यः कृतान्तो हि सर्वश्शर्वश्शिवोऽत्र तु ॥ १ ॥
सर्ववश्यः कतान्तो न, पूर्वपक्षः प्रगल्भताम् ।
यः शास्त्रवश्यस्तस्यैव कृतान्तो वश्यतामियात् ॥ २ ॥
सकलविषयमेकं किन्नुसम्बोधनं स्यात् भवति तु तरुणीनां कीदृशः प्रेमभर्ता ।
परिचितपदमेकं मृत्युसिद्धान्तयोः किम् त्रिपदयुतसमस्या सर्व वश्यःकृतान्तः ॥

*विद्वान् अरैयर् श्रीरामशर्मा,* मेलुकोटे

पीयूषं चेन्निस्सरत्युग्ररश्मेः शीतांशोर्वाऽप्यग्निकीला कराला ।
हर्षोत्कर्षो यादसां चेन्मरौ च प्रायेण स्यात् सर्ववश्यः कृतान्तः ॥

*विद्वान् जगन्नाथः,* मैसूरु

## ( गतसञ्चिकात अनुवृत्ता )

**१ माता सुतं वन्दते ।**

**२ मार्जारस्य किशोरकोऽपि कुरुते विद्वत्समाराधनम् ।**

देवेन्द्रादिषु देवतासु सदसि प्राप्तासु पाणिग्रहे,
श्रीधन्वन्तरिदर्शितासु वरता नासादिता क्लेशतः ।
भास्वद्रश्मिसहस्रजालरुचिरं चालक्ष्य नारायणम्,
कंठक्षिप्तसुमालिका नववधूः मा तासु तं वन्दते ।

*डा सूर्यनारायणनागेन्द्रभट्टः,* आरामपुरम्

नानाक्लेशहरं परं शिवकरं श्रीकर्दमस्यौरसम्,
पुत्रं प्राप्य महेश्वरं नु कपिलं दिव्यं महो भास्वरम् ।
धन्या सा जननी निरीक्ष्य सहसा श्रीदेवहूतिर्मुदा,
वात्सल्येन युता प्रसन्नवदना माता सुतं वन्दते ।

*डा उमारमणः झा,* लखनौ

# पद्यपुरणी

*१ स्तव्यस्तवस्तावकः*

भक्त्यध्वाध्वगमध्वमस्करिकरी रामानुजः श्रीझरी
श्रीकण्ठः श्रुतिकण्ठराट् च भणतु स्तव्यं स्तवं स्तावकम्।
भिन्नं भिन्नमथो श्रुतिशिरोव्यूहप्रमाणो गुरु-
श्रीश्रीशङ्करसिंह आह न भिदी स्तव्यः स्तवः स्तावकः॥

**[ भिदाशब्दस्य भेदेऽर्थः भिदी भवति भेदवान् ]**

*श्रीपाददीक्षितः शं तापसः,* मुळगुंद्

गोमायो त्वमिह प्रधानसचिवस्थाने प्रतिष्ठापितः,
त्वद्गोत्रानुगतान्-गुणाननुपमान्निर्वाचनार्हान् वहून्।
स्तुत्वा, येन हितैषिणा कृतधिया सिंहत्वमारोपितः
स्थाने तत्कपिकुञ्जरः स विपिने स्तव्यस्तव स्तावकः॥

श्रीदेवेगौडलल्लुवादिनेतॄणां राजकीयकम्।
इतिवृत्तं स्मरन्नेव कृतवानपदेशकम्।

*विद्वान् के एस् भास्करभट्टः,* भीमनकोणे

देव त्वं निगमैरपि प्रतिदिनं संस्तूयमानो जनै-
र्न ज्ञातोऽसि न चाखिलसुरस्तोमोऽपि तेऽलं स्तवे।
वाचां नैव च गोचरोऽसि, बहुधा ज्ञात्वापि चेदं पुनः
स्तोत्रे ते विदधत् प्रयत्नमधुना ***स्तव्यस्तव स्तावकः***॥

*विद्वान् एच् वी नागराजराव्,* मैसूरु

वृत्रहन्ता महेन्द्रस्तु श्लोकैः श्रीदेवि भक्तिमान्।
***स्तव्यस्तव स्तावकोऽसौ*** त्रैलोक्याधिपतिर्बभौ॥
***स्तव्यस्तव स्तावकस्तु*** यामिनी-कामिनी-वरः।
कलामात्रेण शिरसा नटाधीश त्वया धृतः॥

*विद्वान् औरैयर् श्रीरामशर्मा,* मेलुकोटे

पारम्पर्यपरीक्षणाचणगणं नावीन्यनिष्ठव्रजं,
व्याहारस्तव हे सुधीरुभयमप्यव्याहतं तर्पयन्।
नाश्चर्यं वितनोति, तद्गतमहागाम्भीर्यविद् यो बुधः,
स्तौति त्वामनघैर्वचोभिरिह स स्तव्यस्तव स्तावकः॥

*विद्वान् एस् जगन्नाथः,* मैसूरु

भो शम्भो ! भवभीतिभञ्जक विभो भास्वत्प्रभामण्डल !
भस्मोद्धूलितफालमध्यनयनोन्मीलज्ज्वलन्मन्मथ ! ।
भूयिष्ठां प्रणतिं दधीमहि वयं भव्याय तुभ्यं सदा
भक्ताग्रेसरभक्तिभावसुलभ ! स्तव्यस्तवस्तावकः ॥

*विद्वान् उमाकान्तभट्टः,* मेलुकोटे

# छन्दस्वत्याः शुभोदर्कं दिशन्ति विविधा बुधाः

श्रीमद्रामायणरसचयं जानकीगीरयं तम्,
टोपीदूतं सहृदयमयं नागरीमीरयन्तम् ।
काव्ये शिक्षाक्षणमथ कवीट्-काव्यमालां च भव्याम्,
वन्दे छन्दस्वति ! तव परांश्चापि सर्वाञ्ज्ञभक्तान् ॥ १ ॥
अकलङ्कमङ्कयुगलं छन्दस्वत्या हितं भवत्प्रहितम् ।
अद्यावपि बुधाद्या ! यद्दृष्टान्तोऽनवद्यगुणिवाण्याः ॥ २ ॥
दिष्टे दिष्ट्याऽदुष्टे म्लिष्टं मिष्टं व शेमुषीसृष्टम् ।
काव्याभासं कञ्चिद्रायाऽनायासतः समं दित्से ॥ ३ ॥
श्रीगुरुकृपैकवर्मा विद्वत्पादूकणप्रणतिशर्मा ।
नवमीस्थतेतनर्मा श्रीपदशर्मेति सत्सु वेदयति ॥ ४ ॥

*व्रं श्री श्रीपाददीक्षितः तापसरः,* मुलुगुन्द

नानावेदपुराणशास्त्रवचनान्यासज्जयन्ती मुदा,
या सूते भुवि भद्रभावभरितां भव्यप्रदां भारतीम् ।
कल्याणीपथगा द्विरेव सततं वर्षे च कर्णाटकात्
स्वच्छन्दं कविकाकलीमविकलां कुर्वीत ***छन्दस्वती*** ॥ १ ॥
पत्रिकां प्राप्य हृष्टोऽहं पठित्वा च प्रहर्षितः ।
प्रेषयिष्ये यथाकालं स्वकाव्यमपि गौरवात् ॥२॥

*श्रीप्रशस्यमित्रशास्त्री,* रायवरेली

कस्मिंश्चिदपि च्छन्दसि विनिवद्धा नैव केवलं शव्दाः ।
कवितापदं लभन्ते रमणीयार्था न यदि ते स्युः ॥ १ ॥
विविधच्छन्दःकलितां छन्दस्वत्याख्यपत्रिकां वीक्ष्य ।
वितरामि धन्यवादांस्तत्र-भवद्भ्यो भवद्भ्य इतः ॥ २ ॥

*श्रीजगन्नाथपाठकः,* अलहावाद्

नानाभावरसात्मिकां सुविमलां ज्ञानप्रदां सौख्यदां,
दिव्यां पद्यमयीं प्रसादजननीं गीर्वाणभाषात्मिकाम् ।
माधुर्यादिगुणैर्युतां मननदां छन्दस्वतीं पत्रिकां,
सम्प्राप्याद्य सुधामुचं नु सहसा मोमुद्यते मे मनः ।

*डा उमारमणः झा,* लखनऊ

छन्दस्वतीं पद्यमयीं विचित्रां षाण्मासिकीं काव्यरसैः प्रयुक्ताम् ।
सम्प्राप्य हर्षोल्लसितोऽहमद्य प्राणौमि सम्पादकभट्टवर्यम् ।

*श्रीकिशोरीरमणझा,* लखनऊ

पद्यानि हृद्यानि च पत्रिकायां दृष्ट्वा पठित्वा च विनोदमाप्तः ।
अद्यापि गीर्वाणकवीन्द्रसार्थाः, ज्ञात्वास्मि सन्तीति नितान्ततुष्टः ॥

*श्री के वि एस् सुब्रह्मण्यः,* वळ्ळारी

उमाकान्तेन विदुषा सुहृदा सम्प्रकाशिताम् ।
छन्दस्वतीं निपायाहं ससन्तोषं शुभं ब्रुवे ॥ १ ॥
पत्रिकाः सन्ति शतशः भाषासु विविधासु च ।
छन्दस्वत्याः परं स्थानं नारोढुं शक्नुवन्ति ताः ॥ २ ॥
देववाण्यां च भाषायां लेखनं यत्र दुर्लभम् ।
किं वक्तव्यं पद्यरूपलेखनानां समागमे ॥ ३ ॥
तथापि सर्वयत्नेन सोत्साहेन प्रवर्तिता ।
पत्रिकेयं रक्षणीया पुत्रिकावत् निरन्तरम् ॥ ४ ॥
धनं यच्छन्तु धनिका लेखनानि कवीश्वराः ।
वाचकाः साधरं सर्वे स्वीकुर्वन्तु पठन्तु च ॥ ५ ॥
मनोहराणि काव्यानि प्रणीतानि च सूरिभिः ।
स्तोत्राणि शास्त्रसम्बद्धलेखनानि वितन्वती ॥ ६ ॥
***छन्दस्वती भासते*** हि विदुषां हस्तभूषणम् ।
कविसंस्कारसन्धात्री परमानन्ददायिनी ॥ ७ ॥
छन्दस्वत्याः शुभोदर्कं कामये कान्तमानसा ।
आचन्द्रार्कं स्थिरा भूयात् काव्यसम्पत्प्रवर्धिनी ॥ ८ ॥

*विद्वान् महाबलेश्वरभट्टः,* वालूरश्शेरी

# सहस्रचन्द्रदर्शनभाग् अरैयर्

५ - ८ - १९९७

विष्णुभक्तेर्विदुक्तिभ्यां वित्तमुक्तेर्विनुयोगतः ।
राष्ट्रप्रेम्णा च सारल्यादरैयर् भाति भारतः ।



अय्यङ्गार्यः श्रीनिवासाभिधेयोऽरैयर्सेवाभाविताशेषभावः ।
आर्यावर्तं पादयात्राभिगम्यं वर्षाशीतिञ्चाप्तवानाप्तमान्यः ।

# संवत्सरचक्राङ्कितः सुदर्शनः

न्यायञ्च वेदान्तमधीत्य मन्त्रान् निर्वर्त्य लक्ष्मीवरपूजनानि ।
विभाति वाराहसपर्ययार्थी सुदर्शनोऽसौ यदुशैलधाम्नि ।



*विद्वान् के. टि. सुदर्शननरसिंहाचार्यः*

२१ - ६ - १९९८

परकालयतीन्द्रैश्च मन्त्रमर्मविनिश्चयैः ।
सभायां सभाजितोऽसौ *मन्त्रविद्यापयोनिधिः* ।

वर्षाणि षष्टिं परिभुज्य नूत्नं सुदर्शने बिभ्रति वर्षचक्रम् ।
देहस्य पुष्टिं मनसोऽपि तुष्टिं गेहेषु हृष्टिं वहु शंसतीयम् ।